अभिषिच्य च भूतेशं कृत्वा कर्म्म स्वभावतः । नदति स्म तदा नादं तेन सा श्रूयते महो । ११९०५

सा ब्रह्मलोकं सम्भाव्यमभिभूय सहस्रशः । गाङ्गता गगनाद्देवी सप्तधा प्रससार ह ।

सहस्रधा वा राजेन्द्र बहुधा च पुनः पुनः । इमं लोकममुञ्चैव भावयन् परमं भवं ।

ततो भूतानि रोहन्ति महाभूतफलानि च । ततः सर्व्वे क्रियारम्भाः प्रावर्त्तन्त मनीषिणां ।

चतुर्भिर्व्वेदनैस्तस्य मुखपद्मादिनिःसृता । तदाऽक्षरमयी सिद्धिर्दिशत्वं समुपागता ।

तस्य ज्ञानमयं पुण्यं चतुष्पादं सनातनं । पतित्वेनाभवद्देवो ब्रह्मा चापि पितामहः । ११९१०

पादा धर्म्मस्य चत्वारो यैरिदं धार्य्यते जगत् । ब्रह्मचर्य्येण व्यक्तेन गार्हस्थ्येन च पावने ।

गुरुभावेन वाक्येन गुह्यगामिनगामिना । इत्येते धर्म्मपादाः स्युः स्वर्गहेतोः प्रचोदिताः ।

न्यायाद्धर्म्मेण शुक्लेन सोमो वर्द्धति मण्डले । ब्रह्मणो ब्रह्मचरणादिदा वर्त्तन्ति शाश्वताः ।

गृहस्थानभिवाक्येन तृप्यन्ति पितरस्तथा । ऋषयोऽपि च धर्म्मेण नगस्य सिरसि स्थिताः ।

नगस्य तस्य संस्पृश्य मेरोः शिखरमुत्तमं । पद्मां संपीड्य वृषणौ ऋषिभिस्तैर्विचार्य्यते । ११९१५

ग्रीवां निगृह्य पृष्ठञ्च विनाम्य प्रहसन्निव । नाभिदेशे करौ न्यस्य सर्व्वशोऽङ्गानि संक्षिपन् ।

मूर्द्ध्नि ब्रह्म समुत्क्षिप्य मनसा स पितामहः । असृजन्मनसा विष्णुं योगाद्योगेश्वरस्य च ।

व्यतिरिक्तेन्द्रियो विष्णुर्बिम्बाद्बिम्बमिवोत्थितः । तेजोमूर्त्तिधरो देवो नभसोन्दुरिवोत्थितः ।

रराज ब्रह्मयोगात् स सहस्रांशुरिवापरः । विराजन्नभसो मध्ये प्रभाभिरतुलं प्रभुः ।

नोपलप्स्यति मूढात्मा प्रत्यक्षं ब्रह्म शाश्वतं । ललाटमध्ये तिष्ठन्तं द्विधाभूतं क्रियां प्रति । ११९२०

ज्योतिश्चक्षुषि सम्बद्धं बिम्बं भास्करसोमयोः । बुद्ध्या पूर्व्वन्तु पश्यन्ति अध्यात्मविदये रताः ।

ब्राह्मणा वेदविद्वांसः सत्यव्रतपरायणाः । नेतरे यातु पश्यन्ति अध्यात्मं नावबुध्यते ।

हिंसायोगैरयोगात्मा सर्व्वप्राणिचरैर्नरः । भूतयो भुवि भूतेशो मोहप्राप्तेन चेतसा ।

कर्म्मभिः कुत्सितैरन्यैः सर्व्वप्राणिवधैषिणां । नराणां योगमास्थाय स्वेषु गात्रेषु भारत ।

समाहितमना ब्रह्मा मोक्षप्राप्तेन हेतुना । चन्द्रमण्डलसंस्थानाज्ज्योतिस्तेजो महत्तदा । ११९२५

प्रविश्य हृदयं क्षिप्रं गायत्र्या नयनान्तरे । गर्भस्य सम्भवो यश्च चतुर्द्धा पुरुषात्मकः ।

ब्रह्मतेजोमयोऽव्यक्तः शाश्वतोऽथ ध्रुवोऽव्ययः । न चेन्द्रियगुणैर्युक्तो युक्तस्तेजोगुणेन च ।

चन्द्रांशुविमलप्रख्यो भ्राजिष्णुर्व्वर्णसंस्थितः । नेत्राभ्यां जनयद्देवो ऋग्वेदं यजुषा सह ।

सामवेदञ्च जिह्वाग्रादथर्व्वाणञ्च मूर्द्धतः । जातमात्रास्तु ते वेदाः क्षेत्रं विन्दन्ति तत्त्वतः ।

तेन वेदत्वमापन्ना यस्माद्विन्दन्ति तत्पदं । ते सृजन्ति तदा वेदा ब्रह्मपूर्व्वं सनातनं । ११९३०

पुरुषं दिव्यरूपाभं स्वैः स्वैर्भावैर्मनोभवैः । अथर्व्वाणस्तु यो भागः शीर्षं यज्ञस्य तत् स्मृतं ।

ग्रीवा बाह्वन्तरे चैव ऋग्भागः सम्प्रकीर्त्तितः । हृदयञ्चैव पार्श्वञ्च सामभागस्तु निर्म्मितः ।

वस्तिशीर्षकटीदेशजङ्घोरुचरणैः सह । एवमेव यजुर्भागः संघातो यज्ञकल्पितः ।

पुरुषो दिव्यरूपाभः सम्भूतो ह्यपरात् पदात् । स हि वेदमयो यज्ञः सर्व्वसत्त्वसुखावहः ।

उभयोर्लोकयोस्तात हिंसावर्ज्यः सनातनः । योगारम्भं कर्म्मसाध्यं ब्रह्मचर्य्यं सनातनं । ११८७५

प्रभवं सर्व्वभूतानां यो विन्दति स वेदवित् स भिक्षुः प्रोच्यते लोके सिद्धिरेव न संशयः ।

निर्मुक्तः सर्व्वकर्म्मभ्यो मुनिभिर्व्वेदपारगैः । वेष्णवं धर्म्ममित्येवं ब्रुवते वेदपारगाः ।

ब्राह्मणा नियमश्रान्ताः ह्यत्वोपनिषदे पदे ।

॥ जनमेजय उवाच ॥ चेतसश्चपलत्वो हि मनोग्राह्यस्य कामतः । कारणं श्रोतुमिच्छामि यथातत्त्वं महामुने ।

॥ वैशम्पायन उवाच ॥ न ह्यस्य कारणं किञ्चिदाख्यं भवति भारत । प्रमर्गतं कारणन्तु शारीरं मानसं नृप । ११८८०

येन वेद्यं विदुर्मर्त्या ब्राह्मणाः संशितव्रताः । अवेद्यमपि वेद्यञ्च शक्यं वेत्तुं न कर्म्मणा ।

ब्राह्मणेन विनीतेन सदा ब्रह्मनिषेविणा । सदा विदिततत्त्वेन सिद्धिर्येनोपसेव्यते ।

सदा चैव शुचिर्भूत्वा नियतो ब्रह्मकर्म्मणा । उपतिष्ठेच्च स गुरुं बद्धाञ्जलिपुटो द्विजः ।

सायम्प्रातश्च तत्त्वज्ञो मोक्षकर्म्माणि कारयेत् । विनीतो ब्रह्मभावेन समाहितमतिर्मुनिः ।

सम्प्रपश्येत मनसा वैष्णवं पदमुत्तमं । ध्यायन्नेव प्रसीदेत समाहितमतिर्द्विजः । ११८८५

गच्छेत परमं ब्रह्म निर्व्विकारेण चेतसा । अपुनर्भावतत्त्वज्ञो निर्म्ममो भावबन्धनात् ।

तदेवाचरमित्याहुर्यत्तद्ब्रह्म सनातनं । न हि तत् कर्म्मयोगेन विद्यायोगेन दर्शितं ।

ब्राह्मणानां विनीतानां वैष्णवे पदसंश्रये । सर्व्वं च व्यतिरिक्तानां कालयोगविमर्दिणां ।

अपुनर्भाविनो लोकाः कर्म्मयोगे प्रतिष्ठिताः । अनादानेन मनसा राजन् कर्म्माणि कर्म्मणि ।

आदानाद्बध्यते जन्तुरनादानात् प्रमुच्यते । ब्राह्मणेभ्यः क्रियाप्राप्तिर्जन्तोः पूर्व्वाज्जनाधिप । ११८९०

मुक्तश्चेन्द्रियबन्धेन प्राप्तश्च परमं पदं । न भूयः पुनरायाति मानुषं देहविग्रहं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

॥ जनमेजय उवाच ॥ उपसर्गांश्च योगस्य ध्यातव्यञ्चैव यत् पदं । सिद्धिं सिद्धिगुणांश्चैव श्रोतुमिच्छामि तत्त्वतः ।

॥ वैशम्पायन उवाच ॥ शृणु विस्तरतः सर्व्वं यथा पृच्छसि मेधया । उपपन्नेन मनसा ब्रह्मादीनामनेकधा ।

पञ्चेन्द्रियगुणांस्त्यक्त्वा पश्यतो ब्रह्मणो नृप । योगयुक्तेन मनसा पञ्चेन्द्रियनिवासिनः ।

ब्रह्मणश्चिन्तयानस्य ब्रह्मयज्ञं सनातनं । बहुरूपमनैश्वर्य्यात् प्रवक्ष्यामि निबोध तत् । ११८९५

पञ्चेन्द्रियस्य ग्रामस्य नवद्वारस्य भारत । कामक्रोधस्य मोहस्य संनिरुद्धस्य मेधया ।

तेजसा मूर्द्धि चाधाय धूमो दोधूयते महान् । नीललोहितवर्णाभैः पीतैः श्वेतैश्च धातुभिः ।

मञ्जिष्ठारागवर्णाभैः कपोतसदृशैस्तथा । शुक्लवैदूर्य्यवर्णाभैः पद्मरागसमप्रभैः ।

स्फाटिकैर्म्मणिवर्णाभैर्नागेन्द्रसदृशैस्तथा । इन्द्रगोपकवर्णाभैश्चन्द्रांशुसलिलप्रभैः ।

पञ्चवर्णैः स धूम्रौघैरिन्द्रायुधसमप्रभैः । सम्पतद्भिश्च युगपन्मेघैरिव समागमे । ११९००

निरुन्धन् इवाकाशं पचद्भिरिवाद्रिभिः । ते धूमवर्णाः संघाता घनाः सलिलधारिणः ।

निर्मुञ्चेव तोयौघान् विविशुर्व्वसुधातलं । मूर्द्धि चैव महानग्निर्मानसो धूयते प्रभुः ।

शुक्लः परमयोगेण शतशोऽर्चिर्भिरावृतः । तस्याग्नेर्विस्फुलिङ्गानां सहस्राणि शतानि च ।

विसस्नुः सर्व्वगात्रेभ्यो ज्वलन्तीव युगाग्रयः। यावन्ति वर्षधारास्तास्तावन्त्योऽर्च्चीऽनलस्य च ।
ग्रमेयुर्व्वारिधाराभिर्विपुले वसुधातले। वर्षाभ्यां युध्यमानस्य वायुर्द्दोधूयते महान् । ११७०५
दिव्यसिद्धगुणोद्भूतः सूक्ष्मः प्राणविवर्द्धनः। वेगवान् भीमनिर्घोषो बलवान् खगगोचरः ।
तैरेव चाग्निसंघातैर्धातुभिः सह सङ्गतः। सहस्रशोऽथ शतशो मूर्त्तिं कृत्वा पृथग्विधां ।
अग्निर्व्वायुर्जलं भूमिर्द्धातवो ब्रह्मचोदिताः। समवायत्वमापन्ना बीजभूता महीतले।
संघातं ब्रह्मवेगेन धातवो गमिता नृप। षड्भ्यश्च चतुर्थोर्ध्वेभ्य स सूक्ष्मः पुरुषो विराट्।
तयोरन्यान् बहून् सूक्ष्मानसृजत् पुरुषोत्तमः। स एव भगवान् विष्णुर्व्यक्तोऽव्यक्तः प्रजापतिः। ११७१०
आधारः सर्व्वभूतानां प्रलये प्रलयान्तकृत्। तं मूर्त्तिं धातुभिर्व्वद्धं विशन्ति ब्रह्मचोदिताः।
तेऽन्तरा पुरुषाः सर्व्वे ज्ञातारः सुखदुःखयोः। अथ चेष्टितुमारब्धा मूर्त्तयो ब्रह्मसम्मिताः।
भित्त्वा च धरणीं देवीं प्रापद्यन्त दिशो दश। इत्येते पार्थिवाः सर्व्वे ऋषयो ब्रह्मनिर्म्मिताः।
तत्रैव प्रलयं याता भूमित्वमुपयान्ति च। कर्म्मक्षयाद्विमुच्यन्ते धातुभिः कर्म्मबन्धनैः।
कर्म्मक्षयाद्विमुक्तत्वादिन्द्रियाणाञ्च बन्धनात्। तामेव प्रकृतिं यान्ति अज्ञाता कर्म्मगोचरैः। ११७१५
जराज्जातं चरश्चैव अग्निगर्भास्तपोमयाः। येन तन्तुरिवाच्छिन्नो भावाभावः प्रवर्त्तते।
धूमादभ्रन्तु संभूतमभ्रात्तोयं सुनिर्म्मलं। जगती जलसम्भूता जगत्येव च यत्फलं।
फलाद्रसश्च संजज्ञे रसात् प्राणश्च देहिनां। रसस्तु तन्मयो जज्ञे यत्तद्ब्रह्म सनातनं।
ब्रह्मोद्दिष्टं प्रधानन्तु बहुभिः कारणान्तरैः। आख्याचैस्तपसि श्रान्तैः सत्यव्रतपरायणैः।
अव्यक्ताद्व्यक्तमापन्नं स्वेन भाविन भारत। अन्तःस्थं सर्व्वभूतेषु चरन्त विद्यया सह। ११७२०
कर्म्म कर्त्तेति राजेन्द्र विवयस्थमनेकधा। नोपलभ्येत चक्षुर्भ्यां तपसा दग्धकिल्बिषैः।
उपलभ्येत चक्षुर्भ्यां यतिभिर्ब्रह्मवादिभिः। निःसृतस्तु भुवोर्मध्ये मेघमुक्त इवांशुमान्।
चरद्भिः पवित्रलोके निर्द्वन्द्वैर्निष्परिग्रहैः। योगधर्म्मेण कारव्य ध्रुवमासाद्यते फलं।
प्रादुर्भावं चयश्चैव भूतस्य निधनं तथा। विधत्ते शतशो ब्रह्मा संचये च भवे तथा।
कर्म्मणः कर्म्मयोगज्ञो भूतेभ्यो नात्र संशयः। अविनाशाय लोकस्य धर्म्मस्याप्यायनेन वै। ११७२५
युगं द्वादशसाहस्रं सहस्रयुगसंज्ञितं। एतद्ब्रह्मयुगं नाम युगानां प्रथमं युगं।
एवं युगसहस्रान्ते संहारः प्रलयोऽन्तकृत्। सूक्ष्मं भवति लोकानां निर्व्विकारमचेतनं।
तथा प्रलयमापन्नं जगत् सर्व्वं सनातनं। ब्रह्म सम्पद्यते सूक्ष्मं निर्म्मितं कारणैर्गुणैः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे अष्टाधिकद्विशतोऽध्यायः॥ २०८ ॥
॥ जनमेजय उवाच ॥ प्राग्वंशं श्रोतुमिच्छामि विस्तरेण महामुने। आद्ययोर्युगयोर्ब्रह्मन् ब्रह्मप्राप्तस्य सर्व्वशः।
॥ वैशम्पायन उवाच ॥ शृणु विस्तरतः सर्व्वं यन्मां पृच्छसि मेधया। उपपन्नेन मनसा दैवप्रत्ययसाधिना। ११७३०
ऋद्धिम्प्राप्तस्तु भगवान् योगात्मा ब्रह्मसम्भवः। भूतानां बहुलत्वञ्च चकारेश्वरः प्रभुः।
स्थितो ब्रह्मासने ब्रह्मा विचिन्तः सहसा प्रभुः। अचलेनैव भावेन स्थाणुभूतेन भारत।

एकस्य मोक्षविषये सर्व्वज्ञानमये पदे । यस्मात् पदसहस्राणि प्रभवन्त्युद्भवन्ति च ।
ब्रह्मयज्ञन्तु यजतो योगात् वेदात्मकं सदा । ब्रह्मणो विपुलं ज्ञानमैश्वर्य्यञ्च प्रवर्त्तते ।
ततः प्रथममैश्वर्य्यं युञ्जानेन प्रवर्त्तितं । ब्रह्मणा ब्रह्मभूतेन भूतानां हितमिच्छता । ११७३५
तदा त्वाकाशमैश्वर्य्यं युञ्जानस्य प्रवर्त्तते । ब्रह्मणो ब्रह्मभूतस्य निर्व्विकारेण कर्म्मणा ।
तदाऽन्तरीक्षं संप्राप्तं ब्रह्म निर्म्मलमव्ययं । संहारः सर्व्वभूतानां नराणां ब्रह्मवादिनां ।
ध्रुवमैश्वर्य्ययोगाणां प्रतिपद्यन्ति देहिनः । आकाशैश्वर्य्यभूतेन संयोगे ब्रह्मवादिनां ।
प्रवर्त्तमानमैश्वर्य्यं वायुभूतं करोति च । विकारैर्व्वहुभिः प्राप्तैः सम्पतद्भिर्म्महाबलैः ।
एतैर्व्विकारैः संवृत्तैर्निरुद्धैश्चैव सर्व्वशः । ध्रुवमैश्वर्य्यमापन्नः सिद्धो भवति ब्राह्मणः । ११७४०
शरीरादभिनिष्क्रम्य आकाशेन प्रधावति । निरालम्बो निरालम्बानालम्ब्य मनसा ततः ।
ऐश्वर्य्यभूतो भूतात्मा चरन् दिवि न दृश्यते । चक्षुर्भिर्व्वहुभिर्लोकैः पुरन्दरमुखैरपि ।
ओङ्कारं ये त्वधीयन्ते मनसा ब्रह्मसत्तमाः । विमुक्ताः सर्व्वकर्म्मभ्यस्ते तं पश्यन्ति माधवः ।
एतद्धि परमं ब्रह्म ब्राह्मणानां मनीषिणां । अन्तश्चरति भूतानां विद्धि चेतनया सह ।
एष शब्दो महानादः पुराणो ब्रह्मसम्भवः । वायुभूतोऽक्षरं प्राप्तो वदन्त्येवं द्विजातयः । ११७४५
अरूपी रूपसम्पन्नो धातुभिः सह सङ्गतः । अन्तश्चरति भूतेषु कामकारकरो वशी ।
ततः परमनुध्याय मनसा पूरयन्निव । वेदात्मकं तदा यज्ञं चिन्तयन्तो मनीषिणः ।
ब्राह्मणाः शुचयो दान्ता यथोऽप्युक्तंस्तदन्वयात् । ब्रह्मलोकं क्रमन्माणा वैष्णवं पदमुत्तमं ।
यद्धेतोः क्रियाः सर्व्वाः कुर्व्वन्ति विगतज्वराः । न त्यजन्ते प्रमवादाने भवमिच्छन्ति भारत ।
त्रिभिर्म्माल्योपहारैश्च प्रतिभानैश्च ये द्विजाः । यजन्ति परमात्मानं विष्णुं सत्यपराक्रमं । ११७५०
यजनं विक्रमञ्चैव ब्रह्माद्याः संप्रचक्रिरे । ब्रह्मा च वैष्णवं तेजो वेदोक्तैर्व्वचनैर्नृप ।
ब्राह्मणैर्ब्रह्मविद्भिश्च ब्रह्मज्ञैर्ब्रह्मवादिभिः । शुचिभिः कर्म्मनिर्मुक्तैः सत्यव्रतपरायणैः ।
धातुभिर्म्मोक्षकाले च महात्मा सम्प्रदृश्यते । तदेव परमं ब्रह्म वैष्णवं परमाद्भुतं ।
रसात्मकं तदैश्वर्य्यं विकारान्ते प्रदृश्यते । घोररूपा विकारास्ते व्यथयन्ति महात्मनः ।
सङ्क्राम्यतीव तोयेन क्षुभ्यमाणो विचेतनः । ऊर्म्मिभिश्छाद्यते चैव शीतोष्णाभिर्विकारतः । ११७५५
महार्णवगतश्चैव दह्यते न च मज्जते । मग्नश्चैव महानद्यः सलिले चैव सीदति ।
सीदमानश्च सलिले स शीतात्पात्यते बलात् । आसनाच्छादनाच्चैव मुच्यमानो विचेतनः ।
श्वभ्रे प्रपद्यमानश्च तोयेन परिषिच्यते । शुक्लवर्णेन बहुधा स्रोतसा मूर्द्ध्नि सर्व्वशः ।
ऊर्द्ध्वं ज्योतिरवेक्षंश्च शुभैः पोतैश्च छाद्यते । वारिपूरैः सुगम्भीरैर्व्विद्युद्भिरिव भासितैः ।
एतैर्व्विकारैः संवृत्तैर्निरुद्धैश्चैव सर्व्वशः । ध्रुवमैश्वर्य्यमासाद्य सिद्धो भवति ब्राह्मणः । ११७६०
रसात्मकं तदैश्वर्य्यं जिह्वायादभिनिःसृतं । सहस्रधारं विततं मेघत्वं समुपागतं ।
रसांश्च विविधान् योगात् संसिद्धः सृजते प्रभुः । धात्वर्थं सर्व्वभूतानां योगप्राप्तेन हेतुना ।

तेजसो रूपमैश्वर्य्यं विकारैः सह वर्द्धते । आत्मनो विघ्नजननं स्वस्थो ब्राह्मणकारणे ।
उग्ररूपैर्व्विकारैश्च हन्यते दण्डपाणिभिः । घोररूपैः सुगम्भीरैः पिङ्गाचैर्न्नरविग्रहैः ।
नेत्रं समुद्धरन्त्येमं जिह्वाग्रश्चास्य विन्दति । मदन्ति युगपन्नादं जृम्भमाणाः पुनः पुनः । ११०६५
पुनरेव तदा भूत्वा बहुरूपास्तदाऽभवन् । नृत्यमानाः प्रगायन्ति तर्पयन्तो विशेषतः ।
स्त्रीभूताश्च ततः सर्व्वे युञ्जानाश्चावलम्बिरे । कण्ठेषु बहुरूपत्वात् विघ्नैश्चैव प्रलोभयन् ।
मधुरैरभिधानैश्च व्याहरन्ति नमीतवत् । पतन्ति युगपत् सर्व्वे पादयोर्मूर्द्धभिर्नताः ।
प्रमादं काङ्क्षमाणाश्च योगस्यान्तरविघ्नतः । बहुप्रकारं कथयन् नृत्यन्ति च रमन्ति च ।
एभिर्व्विकारैर्ब्बहुभिर्निरुद्धैश्चैव सर्व्वशः । ध्रुवमैश्वर्य्यमासाद्य सिद्धो भवति ब्राह्मणः । ११०७०
तदर्च्चिष इवाग्नेया आदित्यस्येव रश्मयः । तेजोरूपकमैश्वर्य्यं जातास्ते जलविन्दवः ।
ज्योतींषि चैव संवृत्ता आकाशे गुणसंवृताः । चरन्ति सततं लोके सूर्य्याचन्द्रमसोर्गतिं ।
चन्द्रसूर्य्यात्मकं दिव्यं ज्योतिश्चक्रमनुत्तमं । एतद्विराजते लोके कालचक्रं ध्रुवश्चरत् ।
अर्द्धमासाश्च मासाश्च ऋतुः संवत्सराण्यथ । क्षणा लवा मुहूर्त्ताश्च कलाः काष्ठास्तथैव च ।
अहोरात्रप्रमाणञ्च निमेषोन्मेषणं तथा । ताराणां गतयश्चैव ग्रहाणाञ्च विशेषतः । ११०७५
अथ पार्थिवमैश्वर्य्यं विकारग्रहसंभवं । योगयुक्तास्त्वभिग्रस्ताः पात्यन्ते स्वचलासनात् ।
अलोभाच्छिद्यते लोके वेपमानोऽनुकीर्त्यते । सीदते वसुधामध्ये भिद्यमानः पुनः पुनः ।
भूतानां बहुरूपैश्च अन्यैश्च तलवासिभिः । विषयैर्युज्यते क्षिप्रं संक्षेपात् संप्ररुध्यते ।
ततः पार्थिवमैश्वर्य्यं सेवमानश्च सर्व्वतः । मूर्त्तिमद्भिश्च बहुधा धातुभिः स च हन्यते ।
शक्तितोमरनिस्त्रिंशैर्गदाभिश्चाप्यनेकधा । असिभिः पात्यते चैव क्षुरधारैः सहस्रशः । ११०८०
भिद्यते चैव बाणाग्रैः सुतीक्ष्णैर्म्मर्म्मभेदिभिः । एभिर्व्विकारैर्न्निवृत्तैर्न्निरुद्धैश्चैव सर्व्वशः ।
ध्रुवमैश्वर्य्यमापन्नः सिद्धो भवति ब्राह्मणः । ततः पार्थिवमैश्वर्य्यं निर्मुक्तस्य विकारतः ।
प्रादुर्भवति युञ्जाने समाधौ प्रलयकृते । दिव्यं तद्गन्धमाघ्राय दिव्यार्थांस्तान् शृणोति च ।
दिव्यरूपैश्च विविधैश्छिद्यते न च भिद्यते । गच्छन् प्रकृतिना चान्तः प्रधानात्मा चरन्निव ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे नवाधिकद्विशततोऽध्यायः ॥ २०९ ॥

॥ वैशम्पायन उवाच ॥ ततोऽन्यां धारणां गत्वा मनसा स पितामहः । ब्रह्मकर्म्मसमारम्भनियुक्तेनान्तरात्मना । ११०८५
सर्व्वाङ्गधारणां कृत्वा मनसा प्रहसन्निव । ब्रह्मयोगेण योगज्ञः सृजते मनसा प्रजाः ।
चक्षुषो रूपसम्पन्ना ह्यप्सराः सृजते प्रभुः । नासिकायाश्च गन्धर्व्वान् सुचित्राम्बरवाससः ।
तुम्बुरुप्रमुखान् सर्व्वान् शतशोऽथ सहस्रशः । नृत्यवादित्रकुशलान् कुशलान् सामगीतिषु ।
ब्रह्मयोगेण योगज्ञः स्वयम्भूर्भगवान् प्रभुः । चारुनेत्रां सुकेशान्तां सुभ्रुश्चारुनिभाननां ।
पद्मेन शतपत्रेण चारुणा च विराजितां । धर्म्यां शुचिगिरं सेव्यां ब्राह्मीं मूर्त्तिमतीं श्रियं । ११०९०
असृजन्मनसा ब्रह्मा सम्यक् प्रोक्तेन चेतसा । भावयोगेन भूतात्मा सर्व्वप्राणभृतां ततः ।

चक्षुषो रूपसम्पन्नाः सृजन् सोऽप्सरसः प्रभुः । नासिकायाश्च गन्धर्व्वान् सुवाचः सुप्रवादितान् ।
गानप्रभावं संचक्रे गन्धर्व्वाणां विशेषतः । अन्येषाञ्चैव विप्राणां गानं ब्रह्मप्रकाशितं ।
पद्भ्यां सृजति भूतानि गतिमन्ति ध्रुवाणि च । नरकिन्नरयक्षांश्च पिशाचोरगराक्षसान् ।
गजान् सिंहांश्च व्याघ्रांश्च मृगांश्चैव सहस्रशः । तृणजातीश्च बहुधा भावस्तेनोत्सतुष्पदान् । ११७९५
ये तु हस्तान्निखादन्ति कर्म्मप्राप्तेन हेतुना । हस्तेभ्यः कर्म्म ससृजे मन्तव्यं मनसा तथा ।
पायुना स विसर्गञ्च भूतानां सुखमिच्छतां । उपस्थेन तथानन्दं पञ्चेन्द्रियसमाधिना ।
हृदयादसृजद्धा वै बाहुभ्यां पक्षिणस्तथा । अजानि चैव सत्त्वानि वेशैस्तैस्तैः पृथग्विधैः ।
ऋषिं त्वङ्गिरसञ्चैव मुनिं ज्वलिततेजसं । ब्रह्मवंशकरं दिव्यं व्यतिरिक्तषडिन्द्रियं ।
भृगोऽन्तरे जनयते योगाद्योगेश्वरः प्रभुः । ब्रह्मवंशकरं दिव्यं भृगुं परमधार्म्मिकं । ११८००
ललाटमध्यादसृजन्नारदं प्रियविग्रहं । सनत्कुमारं मूर्द्ध्नश्च महायोगी पितामहः ।
अभिषिच्य तु सोमञ्च यौवराज्ये पितामहः । ब्राह्मणानाञ्च राजानं शाश्वतं रजनीचरं ।
तपसा महता युक्तो यक्षैः सह निशाकरः । चचार नभसो मध्ये प्रभाभिर्भासयन् जगत् ।
स गात्रैर्भगवान् योगात् मनसा सिद्धिमागतः । सृष्टवान् सर्व्वभूतानि स्थावराणि चराणि च ।
तत्र स्थानानि भूतानां योगांश्चैव पृथग्विधान् । व्यधत्त शतशो ब्रह्मा सर्व्वभूतपितामहः । ११८०५
एष ब्रह्ममयो यज्ञो योगः सांख्यश्च तत्त्वतः । विज्ञानञ्च स्वभावश्च क्षेत्रं क्षेत्रज्ञ एव च ।
एकत्वञ्च पृथक्त्वञ्च सम्भवं निधनं तथा । कालः कालत्रयश्चैव ज्ञेयो विज्ञानमेव च ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे दशाधिकद्विशततोऽध्यायः ॥ २१० ॥
॥ जनमेजय उवाच ॥ श्रुतं ब्रह्मयुगं ब्रह्मन् युगानां प्रथमं युगं । क्षत्रस्यापि युगं ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः ।
ससंक्षेपं सविस्तारं नियमैर्ब्बहुभिश्चितं । उपायज्ञैश्च कथितं क्रतुभिश्चोपशोभितं ।
॥ वैशम्पायन उवाच ॥ एतत्ते कथयिष्यामि यज्ञकर्म्मभिरर्च्चितं । दानधर्म्मैश्च विविधैः प्रजाभिरुपशोभितं । ११८१०
तेऽङ्गुष्ठमात्रा मुनय आदत्ताः सूर्य्यरश्मिभिः । मोक्षप्राप्तेन विधिना निराबाधेन कर्म्मणा ।
प्रवृत्ते चाप्रवृत्ते च नित्यं ब्रह्मपरायणाः । परायणस्य सङ्गम्य ब्रह्मणस्तु महीपते ।
श्रौतृत्ताः पावनाश्चैव ब्राह्मणाश्च महीपते । चारितब्रह्मचर्य्याश्च ब्रह्मज्ञानेन बोधिताः ।
पूर्णे युगसहस्रान्ते प्रभावे प्रलयं गताः । ब्राह्मणा वृत्तसम्पन्ना ज्ञानसिद्धाः समाहिताः ।
व्यतिरिक्तेन्द्रियो विष्णुर्योगात्मा ब्रह्मसम्भवः । दक्षः प्रजापतिर्भूत्वा सृजते विपुलाः प्रजाः । ११८१५
अक्षराद्ब्राह्मणाः सौम्याः क्षरात् क्षत्रियबान्धवाः । वैश्या विकारतश्चैव शूद्रा धूमविकारतः ।
श्वेतलोहितकैर्वर्णैः पीतैर्नीलैश्च ब्राह्मणाः । अभिनिर्व्वर्त्तिता वर्णाश्चिन्तयानेन विष्णुना ।
ततो वर्णत्वमापन्नाः प्रजा लोके चतुर्व्विधाः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महीपते ।
एकलिङ्गाः पृथग्धर्म्मा द्विपादाः परमाद्भुताः । यातनयाऽभिसम्पन्ना गतिज्ञाः सर्व्वकर्म्मसु ।
त्रयाणां वर्णजातानां वेदप्रोक्ताः क्रियाः स्मृताः । तेन ब्राह्मणयोगेन वैष्णवेन महीपते । ११८२०

प्रज्ञया तेजसा योगात्मज्ञात् प्राचेतसः प्रभुः। विष्णुरेव महायोगी कर्म्मणामन्तरं गतः।
ततो निर्म्माणसंभूताः शूद्राः कर्म्मविवर्ज्जिताः। तस्मान्नार्हन्ति सत्कारं न ब्राह्म ब्रह्म विद्यते।
यथाऽग्नौ धूमसंघातो ह्यरण्या मथ्यमानया। प्रादुर्भूतो विसर्पन् वै नोपयुज्यति कर्म्मणि।
एवं शूद्रा विसर्पन्तो भुवि कार्त्स्न्येन जन्मना। नावंकृतेन धर्म्मेण वेदप्रोक्तेन कर्म्मणा।
ततोऽन्ये दक्षपुत्रास्तु सम्भूता ब्रह्मयोनयः। बलवन्तो महोत्साहा महावीर्य्या महौजसः। ११८१५
पित्रा प्रोक्ता महात्मानो दक्षेणाद्यप्रकर्म्मणा। पत्न्यामिच्छाम्यहं श्रोतुं धात्याः पुत्राऽवलो ह्ययं।
ततो विधास्ये तत्त्वज्ञः प्रजानां विपुलं बलं। येनाणां विपुलत्वाद्धि ममापि विपुलाः प्रजाः।
न तेषां दर्शयद्देवो चक्षुषा रूपमात्मनः। प्रजापतिसुतानां वै विपुला मानमिच्छतां।
आत्मनो भावनिर्वृत्ते भावे कृतयुगे तदा। अनित्यो सर्व्वभूतानामण्डजानुद्भिज्जांस्तथा।
संवेदजननी धात्री चेति माया प्रचोदिता। अणूनां तनुतांश्चैव जम्बूनां कर्म्मनोगिनां। ११८२०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे एकादशाधिकद्विशततोऽध्यायः॥ २११॥
॥ जनमेजय उवाच॥ साध्वहं श्रोतुमिच्छामि चेतायां ब्राह्मणोत्तम। यं ज्ञात्वा सर्व्वविद्यानां परं पश्येयमव्ययं।
॥ वैशम्पायन उवाच॥ दक्षस्तु पुरा सम्लभ्य स्त्रीभावं पुरुषोत्तमः। योगाद्योगेश्वरात्मानं निरैक्षो गिरिमूर्द्धनि।
सुजानुः पीनजघना सुभ्रूः पद्मनिभानना। रक्तान्तनयना कान्ता सर्व्वभूतमनोरमा।
दक्षः प्राचेतसस्तस्यां कन्यायां जनयत् प्रभुः। देहाद्धि योगविधिना कन्याः पद्मनिभाननाः।
दक्षः पुरुषरूपेण स्त्रीरूपमपहाय च। दर्शने सर्व्वभूतानां कान्तः कान्ततरोऽभवत्। ११८२५
ताः कन्याः प्रददौ दक्षः स्वयं प्राचेतसः प्रभुः। ब्रह्मादेयेन विधिना ब्रह्मप्राशेन भारत।
प्रददौ दश धर्म्माय कश्यपाय त्रयोदश। सप्तविंशति सोमाय पत्नीर्हेतोः समाहितः।
दक्षो दत्त्वाऽथ ताः कन्याः ब्रह्मलोकं प्रपद्य च। ब्रह्मणाऽध्युषितं पुण्यं समाहितमना मुनिः।
तप्यमानो मृगैः सार्द्धं चचार वसुधां नृप। तृणमूलफलैर्वृद्धो दक्षस्तु तपसा सह।
मृगास्तु तस्य चरितं फलं मोदन्ति ब्राह्मणाः। दीक्षिताः पुण्यकर्म्माणस्तपसा दग्धकिल्बिषाः। ११८३०
संग्रामकाले कालज्ञः शस्त्रनाद्रियते मुनिः। कर्म्म यज्ञकृतं तात सिद्धिं पश्यति सत्वरं।
दानमानप्रवीरास्तु निरुद्वेगा निरामिषाः। मृगैः सह जरां यान्ति सपत्नीकाः सपुत्रिणः।
ब्राह्मणास्तेनसंसिद्धा अनिर्द्धे प्रथमे पदे। ब्राह्मणाऽध्युषितत्वाच्च ब्रह्मचेतमिहोच्यते।
युतिभिः कर्म्मभिर्युक्तैर्ज्जितक्रोधैर्ज्जितेन्द्रियैः। चरद्भिर्व्वसुधां विप्रैरकिञ्चनपर्य्येषिभिः।
या प्रजा पूर्व्वमारूढा मानसी ब्रह्मचारिणी। सैवैषा व्यक्तमापन्ना स्वभावदुरतिक्रमा। ११८३५
अव्यक्ता व्यक्तमापन्ना स्वभावदुरतिक्रमा। व्यक्ताव्यक्तं गमिष्येषा कालधर्म्मान्महीपते।
स्थावरा जङ्गमाश्चैव स्थूलाः सूक्ष्मास्तु भारत। कालयोगेन कालज्ञा भवन्ति न भवन्ति च।
एतास्त्वेताः प्रजाः सर्व्वा दक्षकन्यासु जज्ञिरे। कश्यपेनाद्ययोगेन संयुक्ताः कालधर्म्मणा।

आदित्या वसवो रुद्रा विश्वे च समरुद्गणाः । नागाश्चानेकशिरसः साध्या वै पन्नगास्तथा ।
गन्धर्व्वाः किन्नरा यक्षाः सुपर्णाश्च तथाऽपरे । गरुत्मान् सह पक्षैश्च किन्नराश्च सुवाससः । ११८५०
गावः पशुगणैः सार्द्धं नराश्च वसुधाधिप । धाराधराश्च वसुधाधातारश्च धराधराः ।
गजाः सिंहाश्च व्याघ्राश्च हयाः पक्षधरास्तथा । खड्गा विषाणिनश्चैव वृषभाश्च मृगास्तथा ।
चतुर्व्विषाणा नागेन्द्राः पद्माभा वर्णतः शुभाः । सर्व्वलक्षणसम्पन्नाः प्राणिनः कामरूपिणः ।
तथारूपैस्तथायागाचैस्तैः श्रीशैलैः पराक्रमैः । मुनयः पुनरुद्भूता धर्म्मवेत्ते सनातने ।
सेवन्त्वममघा लोके धर्म्मेणा वेदगोचराः । यथोद्भूताः सुराः सर्व्वे दिवि लोके प्रतिष्ठिताः । ११८५५
ये चान्ये तपसा सिद्धा गृहस्था मनुजाधिप । ब्रह्मचर्य्येण संसिद्धाः परिचर्य्यागता गुरोः ।
ये च योगगतिं प्राप्ताः सिद्धिक्षेत्रार्मुहीपते । क्रियाधिकैः कर्म्मजन्यैर्गतिं यान्ति वै द्विजाः ।
शिलोञ्छवृत्तयः चान्ताः सपत्नीका दृढव्रताः । सर्व्वे तेते दिवि चरा भवन्ति चरितव्रताः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे द्वादशाधिकद्विशततोऽध्यायः ॥ २१२ ॥

॥ वैशम्पायन उवाच ॥ पितामहं पुरस्कृत्य मेरुपृष्ठे समाहिताः । जटाजिनधरा विप्रास्त्यक्तक्रोधा जितेन्द्रियाः ।
पर्व्वतान्तरसंसिद्धे बहुपादपसंवृते । धातुसंरक्षितशिले समे निसृणकण्टके । ११८६०
त्रयाणां ब्रह्मवेदानां पञ्चस्वरविराजिते । मन्त्रयज्ञपरा नित्यं नित्यं ब्रह्महिते रताः ।
एकमेवाग्निमाधाय सर्व्वे ब्राह्मणपुङ्गवाः । विभिदुर्मन्त्रविषयैः सुसमाहितमानसाः ।
त्रिधा प्रणीतो ज्वलनो मुनिभिर्व्वेदपारगैः । अतस्त्रेताग्निमापन्नो यदेकस्त्रिविधः कृतः ।
एक एव महानग्निर्द्देविशः संप्रवर्द्धते । स्वाहाकारेण धर्म्मज्ञ मन्त्राणां कार्य्यसिद्धये ।
स्वयञ्च दक्षः सम्प्राप्तो भगवान् भूतभृत्कृतः । ब्रह्मा ब्राह्मणनिर्म्माता सर्व्वभूतपितामहः । ११८६५
दण्डी चर्म्मी शरी खड्गी शिखी पद्मनिभाननः । प्रभवन्नूत्रसन्तापो जितक्रोधो जितेन्द्रियः ।
यजते पुष्करे ब्रह्मा मेधया सह सङ्गतः । ऋक्प्रोक्तानि सामानि गीयन्ते ब्रह्मवादिभिः ।
घृतं क्षीरं यवा व्रीहिः सर्व्वं परमकं हविः । वेदप्रोक्तं मखे न्यस्तं कल्पितं ब्रह्मणः पदे ।
निर्म्मथ्यारणिमाग्नेयीं शमीगर्भसमुत्थितां । स ब्रह्मा प्रथमं तस्मिन्नग्निमन्थं प्रवर्त्तयत् ।
स ह्यन्यद्विहितं द्रव्यं यथाऽग्निर्यज्ञकर्म्मणि । प्रवर्त्तते विभागैर्व्वा कृतहव्यमयं बलं । ११८७०
फलानि तैः प्रयुक्तानि हवींषि विततेऽध्वरे । प्रयुञ्जते विशेषज्ञा मुनयो ब्रह्मवादिनः ।
पश्चाद्ये चतुरो वेदान् संप्रभाषद्बृहस्पतिः । ब्रह्मज्ञो ब्राह्मणो यज्ञे परया ब्रह्मसम्पदा ।
शिक्षाक्षरसमेताया मधुरायाः समन्ततः । सानुस्वरितरागायाः सरस्वत्याः प्रभाषते ।
तेन ब्राह्मणशब्देन ब्रह्मप्रोक्तेन भारत । विभाति स मखो व्यक्तं ब्रह्मलोक इवापरः ।
मुखैर्ब्रह्मा मखोत्तीर्णो ब्रह्मशब्दैरनामयैः । प्रयोगैः सम्प्रयुक्तैश्च जल्पन्निव प्रवर्त्तते । ११८७५
समिद्भिः सोमकलशैः पात्रैश्च बहुविस्तरैः । यवैर्व्रीहिभिराज्यैश्च पूर्णैश्च जलभाजनैः ।

क्रमप्राप्तैश्च पशुभिः कर्म्मभिश्च पराश्रितैः । गोभिः पयस्विनीभिश्च पारिवर्त्तैश्च कोमलैः ।
ब्रह्मवृद्धो वयोवृद्धस्तपोवृद्धश्च भारत । ब्रह्मज्ञानमयो देवो विद्यया सह सङ्गतः ।
मानसैश्च क्रियामूर्त्ता ये च भूताः स्वयं नृप । ब्रह्मा जुहोति तांस्तत्राग्न्यद्भिः सचितस्तदा ।
तेजोमूर्त्तिधरैरूपैर्न च तत्कर्म्मणाऽस्पृशत् । वेदप्रोक्तेन विधिना सर्व्वप्राणभृतां नृप । ११८८०
निर्मथ्यारणिमाग्नेयीं शमीगर्भसमुत्थितं । यजते क्रतुना पूर्व्वमग्निष्टोमेन स प्रभुः ।
सदस्यैस्तत्सदो व्यक्तं शुशुभे यज्ञकर्म्मणि । जपन्ते मधुरा वाचः सामस्वारक्रियास्ततः ।
कर्म्मभिश्च तपोयुक्तैर्वेदवेदाङ्गपारगैः । सूर्य्येन्दुसदृशैराजन् विरराज महाक्रतुः ।
ब्रह्मघोषेण महता ब्रह्मवास इवापरः । वसुधामिव संप्राप्तैः सर्व्वैरेव दिवौकसैः ।
वेदवेदाङ्गविद्भिश्च विनीतैर्ब्रह्मवादिभिः । गतागतैस्तपःश्रान्तैः स्वर्गलोके महीपते । ११८८५
ज्वलद्भिरिव विप्रैस्तैस्त्रिभिरेवाध्वरेऽग्निभिः । ब्रह्मलोक इवाभाति ब्रह्मणः स महाक्रतुः ।
इन्द्रप्रोक्ताणि सामानि गायन्ति ब्रह्मवादिनः । वचनानि प्रयुक्तानि यजूंषि विततेऽध्वरे ।
तपःश्रान्ता ब्रह्मपराः सत्यव्रतसमाहिताः । आययुर्मुनयः सर्व्वे मनोभिः श्रोत्रवादिभिः ।
होता चैवाभवद्राजन् ब्रह्मत्वे च बृहस्पतिः । सर्व्वधर्म्मविदां श्रेष्ठः पुराणो ब्रह्मसम्भवः ।
यजमानस्य यज्ञान्ते विष्णोः पूजां प्रयुज्य च । अदित्याः पश्चिमे गर्भे तपसा संवृते नृप । ११८९०
पदं विष्णुरजो ब्रह्मा निर्द्वन्द्वो निष्परिग्रहः । यतः पदसहस्राणि भविष्यन्त्युद्भवन्ति च ।
अवध्यस्याप्रमेयस्य व्यतिरिक्तस्य कर्म्मभिः । आत्माऽपि यस्य मुनयो भवन्ति निष्परिग्रहाः ।
परिग्रहाश्च विषया दोषप्राप्ता महीपते । दोषाश्च युगपत् सर्व्वे छादयन्ति मनो बलात् ।
इन्द्रियग्रामविषये चरन्तो निष्परिग्रहाः । परिग्रहं शुभं धर्म्ममविद्यालक्षणं विदुः ।
विद्यालक्षणसंयोगाच्च सनन्काद्यते नृप । यदि चेन्मुनिशब्देन शब्द्यते ब्रह्मवादिभिः । ११८९५
वेदविद्याव्रतस्नातैर्नियतैः कुरुसत्तम । दिवि लोकः सतां स्थानं लोकानां लोक उच्यते ।
यत्र देवा हव्ययुक्ता न क्षयं यान्ति भारत । यजमानश्च भोगैः स्वैः कर्म्मप्राप्तोऽमृते पदे ।
मोदते सह पत्नीभिर्विज्वरो वसुधाधिप । यज्ञावसाने शैलेन्द्रं द्विजेभ्यः प्रददौ विभुः ।
दयया सर्व्वभूतानां निर्म्मलेनान्तरात्मना । ते शैलसर्व्वगात्राणि परस्परविशेषिणः ।
न शेकुः प्रविभागार्थं भेत्तुं सर्व्वोद्यमैरपि । ततस्ते ब्राह्मणगणा निषेदुर्व्वसुधातले । ११९००
श्रमेणाभिहताः सर्व्वे विवर्णवदना नृप । सुपार्श्वो गिरिमुख्यस्तु वाग्भिर्मधुरभाषिताः ।
अब्रवीत् प्रणतः सर्व्वाञ्छिरसा तान् द्विजोत्तमान् । न हि शक्यो बलाद्भेत्तुं युष्माभिरसमग्निभिः ।
अपि वर्षशतैर्दिव्यैः परस्परविरोधिभिः । एकीभूता यदा सर्व्वे भविष्यथ समाहिताः ।
अविरोधेन युगपद्विभजेथ्य निर्वृताः । बलं हि रागदोषाभ्यां वर्द्धते ब्रह्मसत्तमाः ।
विमुक्तं रागदोषाभ्यां ब्रह्म वर्द्धति शाश्वतं । यदाऽहं भेदयिष्यामि स्वगैं भिन्नः शिलातलैः । ११९०५
धातुभिश्च विसर्पद्भिः शिखरैश्चावपातितैः । विशीर्णैः पार्श्वविवरैर्नगैश्चागलितैर्भुवि ।

षडङ्गभिर्व्यालरूपैश्च घोरमनो गुहाश्रयैः। प्रतिगृह्य च तद्वाक्यं शैलेन्द्रस्य सुभाषितं।
तूष्णीम्बभूवुस्ते सर्व्वे तदा ब्राह्मणसत्तमाः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे त्रयोदशाधिकद्विशततमोऽध्यायः॥ २१३॥

॥ वैशम्पायन उवाच॥ वलिहोमाश्च वर्द्धन्ते प्रवर्त्तन्ति भारत। द्विजानां तपसाढ्यानां गृहधर्म्मेषु तिष्ठतां।
देवताद्याश्च पूज्यन्ते तदाप्रभृति भारत। तेषां ब्रह्मविदां राजन् पृथिव्यां ब्रह्मवादिभिः। ११९१०
तत्रैव ब्रह्मसदने समे निस्तृणकण्टके। प्राच्येऽस्मिन्नरणे देशे पुण्ये पर्व्वतरोधसि।
वासं यत्र प्रकुर्व्वन्ति दृष्ट्वा भगवतः क्रियां। तपोऽर्थिनो महाभागा ब्रह्मचर्य्यव्रते स्थिताः।
गृहस्थधर्म्मे निरता दानप्राप्तेन चेतसा। मुनयश्चापि काङ्क्षन्ति धर्म्मेण हविकाङ्क्षिणः।
अन्ये कर्म्मफले चैव रता ब्राह्मणपुङ्गवाः। अग्निहोत्रव्रतस्नाता जितक्रोधाः समाहिताः।
दैवयुक्तेन चायुक्ताः कर्म्मणा ब्रह्मसत्तमाः। चीरवल्कलसंवीता नियता नियतेन्द्रियाः। ११९१५
चरन्तो ब्रह्मचर्य्यञ्च यत्नमास्थाय दारुणं। अनेन विधिना राजन् क्रमप्राप्तेन सर्व्वशः।
क्रमाद्यो वेद संस्कारं पुण्यं प्राप्ताः सनातनं। पूर्व्वैराचरितं राजन् मुनिभिर्ब्रह्मवादिभिः।
अवेदविद्यो नागच्छेच्चापि रौद्रं व्रतञ्चरेत्। न च त्यागेन गच्छेत गृहधर्म्मञ्च न त्यजेत्।
एतन्न गच्छेदध्वानमप्राप्तो वेदसञ्चयं। ऋचश्च सञ्चयः सर्व्वाः सामगानञ्च भारत।
ये चापि पुत्त्रिणो न स्युः श्रुत्वाऽप्यप्राप्नुयुः फलं। ब्राह्मणास्तु तपःश्रान्ता परिचर्य्यागता गुरोः। ११९२०
यस्य नैवं श्रुतं ब्रह्म न गृहीतं विशाम्पते। कामं तं धार्म्मिको राजा दासकर्म्माणि कारयेत्।
अथवा नैव विद्येत यो ब्रह्म नाद्रियेद्द्विजः। शौचादीनामविषये सतः पूर्व्वं समाहरेत्।
एवं सर्व्वक्रियारम्भं वेदपूर्व्वं समाचरेत्। ब्राह्मणो भूतिसम्पन्नो य इच्छेद्भूतिमात्मनः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे चतुर्द्दशाधिकद्विशततमोऽध्यायः॥ २१४॥

॥ वैशम्पायन उवाच॥ ते तु गोब्राह्मणानाञ्च चन्द्रादित्यपुरस्कृताः। ब्राह्मणान् पूजयन् राजन् वसुभिर्ब्रह्मसम्भवैः
नारदप्रमुखाश्चैव गन्धर्व्वा ऋषयो नृप। कुर्व्वन्ति सततं यज्ञैः क्रमप्राप्तं पितामहं। ११९२५
वचोभिर्म्मधुराभाषैः पञ्चेन्द्रियनिवासिभिः। सर्व्वभूतप्रियकरैः सर्व्वभूतहितैषिभिः।
स्तूयमानश्च यज्ञान्ते पञ्चेन्द्रियसमाहितैः। प्रोवाच भगवान् ब्रह्मा दिष्ट्या दिष्ट्येति भारत।
ततः कश्यपमाभाष्य प्रोवाच भगवान् प्रभुः। भवानपि सुतैः सार्द्धं यक्ष्यते वसुधातले।
क्रतुभिः परमप्राप्तैः संपूर्णवरदक्षिणैः। सुरासुराश्च ते सर्व्वे यथाप्रतिगुणैः प्रभो।
वयं यक्ष्यामहे सर्व्वे पूर्व्वं यक्ष्यामहे वयं। एवमन्योन्यसंरम्भाद्विषन्ते बलदर्पिताः। ११९३०
दैतेयाश्चाप्यदैतेयाः परस्परजयैषिणः। युद्धायैव प्रतिष्ठन्ति प्रगृह्य विपुलौ भुजौ।
निवार्य्यमाणा ऋषिभिस्तपसा दग्धकिल्बिषैः। अन्यैश्च षडङ्गभिर्व्विप्रैर्व्वेदवेदाङ्गपारगैः।
निवार्य्यमाणा युध्यन्ते वृषभा इव गोकुले। यथुद्धारम्भसंक्रान्ताः सर्व्वप्राणैर्जयैषिणः।
पश्यतां सर्व्वभूतानां मृत्योर्व्विषयमागताः। ततः शब्देन महता परं कृत्वा महाबलाः।

घ्नन्ति बाहुभिः क्रुद्धाः सपक्षा इव पक्षिणः । चचाल वसुधा चैव पदाक्रान्ता च रोषिभिः । ११९९५
गौर्यथा पुरुषाक्रान्ता निषीदति महाजले । पर्व्वताश्च विशीर्य्यन्ते नर्दमाना वृषा इव ।
चुक्षुभुश्च महानद्यस्ताडिता मातरिश्वना । ततः समभवद्युद्धं मधोर्विष्णोश्च भारत ।
युगान्तकरणं घोरं सर्व्वप्राणिभयङ्करं । प्रममाथ बलं विष्णुः समग्रबलपौरुषं ।
वह्नेरिव बलं दीप्तं प्रमथत्यम्बुना यथा । तथा प्रशमितं तेन भगवत्यपकारिणा ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे पञ्चदशाधिकद्विशततोऽध्यायः ॥ २१५ ॥
॥ वैशम्पायन उवाच ॥ बलवान् स तु दैतेयो मधुर्भीमपराक्रमः । बबन्ध पाशैर्विविधैर्म्महेन्द्रं पर्व्वतान्तरे । ११९००
ते वै प्रह्लादवचनाद्बलवन्तश्च भारत । ऐश्वर्य्यमिन्द्रमाक्रम्य भविष्यं बुद्धिसंश्रयात् ।
बद्धेन्द्रं सहसा मध्ये पाशैर्म्मर्म्मविवर्ज्जितैः । आयसैर्व्वज्रभिश्चैर्व्वलवद्भिर्विदारणैः ।
विष्णुमेवाग्रणीरुग्रमाक्रमयन् युद्धकोविदः । मध्ये गणानां सर्व्वेषां कालस्य वशमागतः ।
द्वैधीभूताः काश्यपेया मधोर्व्वशमुपागताः । युद्धार्थमभ्यधावन्त प्रगृह्य विपुला गदाः ।
गन्धर्व्वाः किन्नराश्चैव वाद्ये गीते च कोविदाः । प्रनृत्यन्ति प्रागयन्ति प्रहसन्ति च सर्व्वशः । ११९०५
तन्त्रीभिः सुप्रयुक्ताभिर्म्मधुराभिः स्वभावतः । मनो मधोर्व्विधुन्वन्ति युध्यमानस्य रागिणः ।
मधोर्व्वलिलमधुना नियोगात् पद्मयोनिनः । एतान् विकारान् कुर्व्वन्ति गन्धर्व्वाः सत्यवादिनः ।
तत्र शक्ता हि गान्धर्व्वे तस्मिन् शब्दे दधर्म्मन । दानवाश्च सुराश्चैव मत्यर्थं यान्ति प्राणदन् ।
मधोश्च मन आविश्य पश्यन् योगेन चक्षुषा । मन्दरं प्रापतद्विष्णुर्गूढोऽग्निरिव दारुषु ।
ऋषयो दीप्तमनसः किञ्चिद्व्यथितमानसाः । पितामहं पुरस्कृत्य वर्णेनान्तरधीयत । ११९१०
विष्णुं सोऽभ्यहनत् क्रुद्धो मधुर्म्मधुनिभेक्षणः । भुजेन शङ्खदेशान्ते न चकम्पे पदात् पदं ।
विष्णुस्त्वभ्यहनद्दैत्यं कराग्रेण स्तनान्तरे । स पपात महीं तूर्णं आनुभ्यां रुधिरं वमन् ।
न चैनं पतितं हन्ति विष्णुर्युद्धविशारदः । बाहुयुद्धे हि समर्थं मत्वाऽमितपराक्रमः ।
इन्द्रध्वज इवोत्तिष्ठज्जानुभ्यां स महीतलात् । मधूरोषपरीतात्मा निर्द्दहन्निव चक्षुषा ।
परुषाभिस्ततो वाग्भिरन्योन्यमभिगर्ज्जतः । समीयतुर्व्वाहुयुद्धे परस्परजयैषिणौ । ११९१५
उभौ तौ बाहुबलिनावुभौ युद्धविशारदौ । उभौ च तपसा श्रान्तावुभौ सत्यपराक्रमौ ।
दृढप्रहारिणौ वीरावन्योन्यं तौ चकर्षतुः । शैलेन्द्राविव युध्यन्तौ पक्षैः पाषाणसन्निभैः ।
विकर्षन्तौ च मन्तौ च अन्योन्यं वसुधातले । गजाविव विषाणाग्रैर्नखाग्रैश्च विचेरतुः ।
ततो व्रणमुखैश्चैव सुस्राव रुधिरं बहु । गोवाक्ने धातुसंसृष्टं शैलेभ्य इव काञ्चनं ।
संसिक्तौ रुधिरौघैश्च स्रवद्भिः समरक्षितौ । अयोगतैः पदाग्रैश्च तौ व्यदारयतां महीं । ११९२०
अभिहत्य तु तौ वीरौ परस्परमनेकधा । पतङ्गाविव युध्येतां पक्षाभ्यां संसरद्भिर्नौ ।
शुश्रुवुश्चान्तरीक्षेऽथ सर्व्वभूतानि पुष्करे । सिद्धानां वदतामुक्ताः परया वर्णसम्पदा ।
स्तुतयो विष्णुसंयुक्ताः सत्याः सत्यपराक्रमे । शरीरं धातुसंयुक्तं संयुक्तं चेतनेन च ।

तद्ब्रह्म दग्निवैर्युक्तं तेजोभूतं सनातनं । भुवं तिष्ठन्ति भूतानि सूक्ष्मे प्रलयतां गते ।
पुनस्तोद्भवते सूक्ष्मं बहुरूपमनेकधा । प्रबोध्य भावं भूतानां त्रिषु लोकेषु कामदः । ११८६६
सुरूपो बहुरूपस्त्वं लोकान् सञ्चरते वशी । मामभीष्मनुमास्थाय बहुभिः कारणान्तरैः ।
योगात्मा धारयन्नुर्वीं नागात्मा नन्दिवर्द्धनः । ब्रह्मभूतं परञ्चैव सूक्ष्मेनात्मानमीश्वरः ।
ब्राह्मेण विप्रान् वसति युद्धेनैव च क्षत्रियान् । प्रदानकर्म्मणा वैश्यान् शूद्रान् परिचरेण च ।
गावः क्षीरप्रदानेन अश्वान् यज्ञेषु प्रोक्षणैः । पितरस्तोयपणैर्वेह हविर्भागेण देवताः ।
चतुर्भिर्व्यतिरिक्ताङ्गैस्त्रिभिरन्यैश्च धातुभिः । सप्तभिः पितृभिर्नित्यैस्त्रीँल्लोकान् परिरक्षति । ११८७०
चन्द्रसूर्य्यात्मकं नित्यं तद्रूपं निहितात्मकं । प्रकाशे चाप्रकाशे च निगूढं स्वेन तेजसा ।
त्रयस्तु पितरो नित्यं वर्द्धयन्ति दिवाकरं । चतुर्भिः पितृभिश्चैव चन्द्रो वर्द्धति मण्डले ।
त्रयः पितृगणा नित्यं पिण्डान् चस्वादयन्ति ते । चत्वारोऽन्ये पितृगणाः तिष्ठाः पञ्च च आददे ।
त्वमेव पञ्च तान् धर्म्मांस्त्वमेवापञ्चतान्विभो । सनातनमयो दिव्यः शाश्वतो ब्रह्मसम्भवः ।
तस्मात्ते तेज आदत्ते अग्निर्व्वायुश्च सर्व्वशः । अतस्त्वं कर्म्मणा तेन आदित्यः समपद्यथाः । ११८७५
यद्दग्धासि जगत् सर्व्वं रश्मिभिः प्रदहन्निव । युगान्तकाले सम्प्राप्ते परां सिद्धिमुपागतः ।
पर्व्वसन्ध्यावमावास्यां लोकश्चरसि मानुषं । ऋषिभिः सह गूढात्मा सूर्य्येन्दुवसुसप्रभैः ।
सफलं कर्म्म कुर्व्वाणो यजतां पुष्टिवर्द्धनं । हेतुनामधिकाराय माभूत् कर्म्मविपर्य्ययः ।
वानस्पत्यौषधीश्चैव युगपत् प्रतिपद्यसे । बालभावाय वसुधा पक्षे पक्षे जनिस्तव ।
भूतानां भुवि भूतेश भावार्थं वसुधातले । वसु यद्भुवि किञ्चित्तु तत् सर्व्वं त्वन्मयं विभो । ११८[illegible]
त्वमेव द्विविधं धर्म्मं शाश्वतं वसुधातले । देवयज्ञं मन्त्रवाक्यमात्मयज्ञं समानुषं ।
द्विविधः स्वर्गमार्गश्च सूर्य्यश्चन्द्रश्च निर्म्मलः । चन्द्रमाः पितृयानश्च देवयानश्च भास्करः ।
त्वमेव वसुधायुक्तो विश्वश्चरसि मायया । एकीकृत्य गणान् सर्व्वान् संक्षिप्यामुत्र सम्भवः ।
एकस्त्वमसि संभूतः पुराणः पुरुषो विराट् । अक्षयश्चाप्रमेयश्च कारकाकारको वशी ।
मूर्त्तस्तेजसि संभूतो वायुः पर्य्येति खेचरः । सप्तभीरूपसंख्यानैर्नित्यमास्थाय तिष्ठसि । ११८८५
साधने ह्यभिनिर्व्वाणे संहारे प्रलये तथा । धाता धारणकाले च दिशश्चतुषि धारिणि ।
सेव्यमानो मुनिगणैर्नित्यं विगतकल्मषैः । कर्म्मभिः सत्यमापन्नैः समरागैर्जितेन्द्रियैः ।
स्तूयमानश्च विविधैः सिद्धैर्मुनिवरैस्तथा । सस्मार विपुलं देहं हरिर्हयशिरो महान् ।
कृत्वा वेदमयं रूपं सर्व्वदेवमयं वपुः । शिरोमध्ये महादेवो ब्रह्मा तु हृदयस्थितः ।
आदित्या रश्मयो वालाश्चक्षुषी शशिभास्करौ । जङ्घे तु वसवः साध्याः सर्व्वसन्धिषु देवताः । ११८९०
जिह्वा वैश्वानरो देवः सत्या देवी सरस्वती । मरुतो वरुणश्चैव जानुदेशे व्यवस्थितः ।
एवं कृत्वा तथा रूपं सुराणामद्भुतं महत् । असुरं पीडयामास क्रोधरक्तान्तलोचनः ।
मधुमेदोऽवपूर्णा च पृथिवी समदृश्यत । प्रमदेव घनान्ते च रक्तांशुकनिवासिनी ।

मेदिनीत्येव शब्दश्च लब्धः पृथ्व्या नरोत्तम । नानासुरसहस्रेण धरण्याः संप्रतिष्ठितं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे षोडशाधिकद्विशततोऽध्यायः ॥ २१६ ॥

॥ वैशम्पायन उवाच ॥ मधोर्निपतनं दृष्ट्वा सर्व्वभूतानि पौष्करे । प्रहृष्टानि प्रगायन्ति प्रनृत्यन्ति च सर्व्वशः । ११९९५
सुपार्श्वो गिरिमुख्यश्च काञ्चनैः शिखरोत्तमैः । बहुधातुविचित्रैश्च खं लिखन्निव चाबभौ ।
गिरयश्चाभिशोभन्ते धातुभिः समरञ्जिताः । प्रांशुभिः शिखराग्रैश्च सविद्युत इवाम्बुदाः ।
पवनवातोद्धूतो रेणुश्चूर्णैः साञ्जनशालुकैः । छादयन् पर्व्वताग्राणि महामेघ इवाबभौ ।
मेघसंश्लिष्टशिखराः पवनविच्छिन्नपादपाः । काञ्चनोल्लेदबहुलाः खे तिष्ठन्तीव पर्व्वताः ।
पवनन्तः सशिखरा हेमधातुभिरञ्जिताः । पवनेन समुद्धूतास्ता नयन्ति विहङ्गमान् । १२०००
काञ्चनाः पर्व्वताः सर्व्वे स्फाटिकैर्म्मणिभिश्चिताः । सूर्य्यकान्तैश्च बहुभिश्चन्द्रकान्तैश्च निर्म्मलैः ।
हिमवांश्च महाशैलः श्वेतैर्द्धातुभिराचितः । काञ्चनैः शिखराग्रैश्च सूर्य्यपादप्रकाशितैः ।
मणिभिश्च प्रकाशद्भिः पद्मान्तरविनिःसृतैः । ताम्रपुष्पैश्च शिखरैर्द्दीप्यमानैः स्वतेजसा ।
मन्दरश्चोग्रशिखरः स्फाटिकैर्म्मणिभिश्चितः । बहुगर्भैर्निरालम्बैः स्वर्गोपम इवाबभौ ।
सह शृङ्गैश्च कैलासः शिलाधातुविभूषितः । तोरणैश्चैव निविडैः प्रांशुभिश्चैव पादपैः । १२००५
प्रवादयद्भिर्गन्धर्व्वैः किन्नरैश्च प्रगायिभिः । देवकन्याङ्गनाभिश्च प्रक्रीडित इवाबभौ ।
मधुरैर्व्वाद्यगीतैश्च नृत्यैश्चाभिनयोद्धतैः । शृङ्गारैः सुप्रहारैश्च कैलासो मदनायते ।
आदित्याभासिभिः शृङ्गैर्भिन्नाञ्जनचयप्रभैः । विन्ध्यो नीलाम्बुदश्यामो त्रिभिन्न इव तोयदः ।
धान्यार्थं सर्व्वभूतानां मेरुपृष्ठे महाचले । निर्व्वमुर्निर्म्मलं तोयं मेघजालैरिवोत्तमैः ।
शिलाभिर्व्बहुचित्राभिर्द्धातुभिर्व्बहुचित्रितैः । प्रस्रवद्भिर्गुहाद्वारैः सलिलं स्फाटिकप्रभं । १२०१०
शोभन्ते वायुसंमूढा घना इव सविद्युतः । विचैः पुष्पितद्रुगणाः शोभन्त इव भूषिताः ।
नगाः कनकसंभूतैर्व्विचित्रैरिव भूषणैः । विहङ्गमाभिलीनाश्च लतासक्तसमाश्रिताः ।
विलम्बन्त्यः सपुष्पाश्च नृत्यन्ते वायुघट्टिताः । पवनेन समुद्भूता महता माधवेऽहनि ।
मुमुचुः पुष्पसंघातं तोयवेलेव वर्षति । फलवद्भिश्च विपुलैः शाखास्कन्धावरोहिभिः ।
पादपैः पर्णबहुलैर्भ्रियते च वसुन्धरा । मधुप्रिया मधुकरा मधुमत्तविहङ्गमाः । १२०१५
घोषयन्तीव गायन्तः कामस्यागमसम्भवं । विष्णुर्मधुनिहन्ता च चकार मधुवाहिनीं ।
शुद्धां प्रस्रवनिर्भेदां सुतीर्थां बहुलोदकां । अङ्गारवर्णसिकतां मधुतोयां मनोरमां ।
विमलैरम्बुभिः पूर्णां पुष्पसञ्चयवाहिनीं । विवेश पुष्करं सा तु ब्रह्मणो वाक्यचोदिता ।
ऋषिभिश्चानुचरिता ब्रह्मतल्पं निवेशिभिः । धात्री कपिलरूपेण गौर्भूत्वा क्षरते पयः ।
मधुरं विततं यज्ञे ब्रह्मणो वाक्यचोदिता । सरश्च पृथिवीभूतं सस्यार्तं प्राप्तवान्महीं । १२०२०
शुद्धश्च भजते लोकं शाश्वतं परमाद्भुतं । सरस्वत्याः समुद्भूतं ब्रह्मवेत्ति तथोमुदं ।
महातीर्थमतिक्रम्य पुष्करेषु विसर्पति । सुचारुरूपा धर्म्मज्ञा प्रजारूपेण छादयत् ।

रूपं कनकवर्णाभं तपोयुक्तेन वर्चसा । अङ्गनाभक्तिसंयुक्तः संभूतः पर्व्वतो महान् ।
गुहद्वारगुणप्राणः शाश्वतः सिद्धसेवितः । वेदिकाभिः सुचित्राभिः काञ्चनीभिर्विराजितः ।
पुष्कराणि परीत्यैव स्थितो विपुलदक्षिणः । महामेरोर्यथा रूपं पञ्चभिर्धातुभिर्वृतं ।
चेतनयाऽभिसम्पन्नो रूपेणाद्भुतदर्शनः । एवं रूपं करिष्यामि मनसा धर्म्मचारिणा ।
रूपं बहुविधं लोके पार्थिवीं चेतनां तथा । त्रींश्च लोकान् प्रपद्येयं पञ्चभिर्धातुलक्षणैः ।
षष्ठेन च स सर्व्वेयं मनसा धर्म्मचारिणीं । सर्व्वेषु भावमोहाभ्यां पश्यन्नपि समुद्भवः ।
विमुक्तः सर्व्वसङ्गेभ्यो धारयन्निष्पृरिग्रहः । न च विन्देत मां कश्चिन्मनसा कामकारिणीं ।
पञ्चधातुनिबद्धाश्च नानाभावितचेष्टिताः । ये च विष्णुमधोयन्ते बहुधा पादविग्रहैः । ११०३०
ते मां पश्येयुरव्यक्तां तपसा दग्धकिल्बिषाः । ये च मामभिरोहेयुर्नरा धर्म्मपथे स्थिताः ।
तेऽपि स्वर्गजितः स्वर्गे पश्येयुर्मां गतक्लमाः । यत्रैव पर्व्वतः प्रांशुर्मारुपृष्ठे प्रतिष्ठितः ।
एतमारुह्य युध्येयुः प्राणत्यागेषु निर्म्मलाः । अप्सरोभिः समागम्य विचरेयुर्मनोजवाः ।
नन्दनं वनमासाद्य काम्यकञ्च महद्वनं । इमा विद्याः समास्थाय मद्भक्ताः पुष्करेष्विह ।
शरीरं वदयिष्यन्ति व्रतैर्बहुविधैः शुभाः । सिद्धिं प्राप्य क्रमेयुस्ते कामैर्बहुविधैर्नराः । ११०३५
इमं लोकममुञ्चैव सम्पतेयुर्यथासुखं । गौरी सिद्धेति विख्याता त्रिषु लोकेषु विद्यया ।
प्रभावं तपसा कृत्स्नं दर्शयन्ति समाहिताः । यथा ज्ञानाभिसम्पन्नानामभिज्ञानात् ससंग्रहाः ।
भवेयुस्ते निरारम्भा धातुभिर्बहुसम्भ्रमाः । सहस्रगुणमप्यत्र दत्त्वा दानफलानि च ।
अविमानेन विप्राणां मनःशुद्धेन कर्म्मणा । सर्व्वैवाप्रमेयेण अत्यर्थं फलमाप्नुयुः ।
अमुष्मिन् लोके धर्म्मज्ञाः सह सर्व्वकुलोद्भवैः । येषामिह च सान्निध्यं यज्ञे ब्राह्मणसंकुले । ११०
ते भूयो यजमानाद्या अभिषिच्य पुनः पुनः । तथा तां मन्यसे गौरीं मनसा धर्म्मचारिणीं ।
अनुग्रहाय भूतानां मामजश्च तपोधनं । सत्य एष वरो विप्र भविता नात्र संशयः ।
नाफलो विद्यते धर्म्मश्चरितो ब्रह्मचारिणा ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सप्तदशाधिकद्विशततोऽध्यायः ॥ २१७ ॥
॥ वैशम्पायन उवाच ॥ दिशं जिगमिषुर्द्दिव्यामुत्तरां सत्यसाधनः । तथा स धातुनिचये पुण्ये पर्व्वतरोधसि ।
विष्णुः परमधर्म्मात्मा एकपादेन तस्थिवान् । दशवर्षसहस्राणि पुष्करे पुष्करेक्षणः । ११०४५
आत्मन्यात्मानमाधाय तपसा ब्रह्मसम्भवः । घटते कर्म्मयोगेण लोकमुत्थानकारणात् ।
भास्वरो भस्मनाच्छाद्य गात्राणि स्वयमात्मनः । अष्टौ वर्षसहस्राणि सहस्राक्ष तपोधनः ।
तेजसा तेन ज्योतींषि विभाव्य शाल्मलिप्रभः । तिष्ठते मनसो मध्ये योगात्मा भावयन् जगत् ।
सोमो विषयमाचिन्त्य मनसा धारयन्मनः । मुक्तः परमधर्म्मात्मा आद्यां सिद्धिमुपागतः ।
सम्प्रदृश्यति सर्व्वत्र दिवि भूम्यम्बरे तथा । ज्योतिस्थः कर्म्म कुर्व्वाणो बहुरूपः स्वसम्पदा । ११०५०
महेश्वरो निगूढात्मा वृषरूपेण तिष्ठति । उद्धृत्य दक्षिणं पादं वायुभक्षः समाहितः ।

अष्टौ वर्षसहस्राणि सहस्रं शतमेव च । महायोगी महादेवो नियमाद्ब्रह्मसम्भवः ।
अथ वायुर्घनीभूतो मध्ये चरति गोपतेः । फेनीभूतं समुद्गारैः पवनं निर्गिरन्मुखात् ।
स निष्क्रान्तस्ततो वक्त्रात् प्राणेन परमात्मवान् । निर्यासभूतः पतितो नैवार्द्रो नैव पार्थिवः ।
स फेनो वारिमाविश्य चचार वसुधातले । नैवार्द्रो नैव शुष्काङ्गो वायुः संघातमागतः । १२०५५
तत्काले फेनमुत्क्षिप्य पवनः सह वारिणा । निरालम्बे निरालम्बस्त्वभ्राणि समपद्यत ।
ते क्षिपन्ति पयो भूमावात्मानं स्वेन घट्टिताः । नीलमेघारुणप्रख्या नैवार्द्रा नैव पार्थिवाः ।
ब्राह्मीं मूर्त्तिं समाधाय वायुः सर्व्वत्रगो वशी । समाः सहस्रं संपूर्णं चचार विपुलं तपः ।
वह्निर्व्वह्वजटी भूत्वा चीरवल्कलवासधृक् । तपस्तप्यदनाहारो मौनमास्थाय पुष्करे ।
वर्षाणाञ्च सहस्राणि त्रीणि चैकञ्च यत्नतः । तस्याग्नेस्तेजःसंभूतो महानग्निः प्रवर्त्तते । १२०६०
स्वर्गप्रकाशकश्चैव स्वर्गवासी तमोनुदः । दिव्यो भूतप्रकाशाख्यस्तपसा ब्रह्मसम्भवः ।
तपश्चरति धूमाग्निर्लोकानां भूतभावनः । तत्तमो भुवि राजेन्द्र मानुषेषु प्रतिष्ठितं ।
भास्करस्तेजसंहारो यतो भवति सत्तम । मर्त्यानां सर्व्वभूतानां तेज आक्षिप्य वर्त्तते ।
न तु योगबले राजन् ब्राह्मणस्य विशेषतः । तत्तमो नाशयेद्रात्रौ नाथहो भविता दयं ।
पुष्पमित्रो महातेजा यत्नः सर्व्वत्रगो वशी । तपश्चरति धर्म्मात्मा पुष्करेषु समाहितः । १२०६५
महेन्द्रशिखराद्धारा यावत्यो यान्ति मेदिनीं । तावत्स्वरूपमास्थाय तिष्ठते निखिलाः समाः ।
जानुभ्यां पतितो भूमौ ज्योतिर्नभसि पश्यति । समाः सहस्रं निखिलं नेत्रैर्निमिषैर्जगत ।
नेत्राणि बहुधा तस्य नेत्रान्तैरभिनिःसृताः । मध्यं दिनकरे प्राप्ते रश्मिवान् स परिग्रहे ।
ते रश्मयः प्रभान्तैः शतशोऽथ सहस्रशः । रराज तेजःसंयोगाज्ज्वलद्भिरिव पावकः ।
सविस्फुलिङ्गैर्नेत्रान्तैरादित्यमनुवर्त्तते । कर्म्मणोऽन्ते युगान्ते वा जगतो बहुरूपिणः । १२०७०
बहुधा तु पुनर्भूत्वा निषण्णो वसुधातले । समाः सहस्रं संपूर्णं तपस्तेपे सुदारुणं ।
निगृहीतेन्द्रियो भूत्वा नाप्सरोभिर्ललाम ह । मेरोः शिखरमासाद्य कामं कामेन पीडयन् ।
तपःकामः स यक्षस्तु कुवेरो नरवाहनः । विष्णुरेव तपोऽध्यक्षस्तेजसोऽन्तेन जृम्भते ।
न हि कश्चित् पुमानस्ति य एतत्तप आचरेत् । त्रिषु लोकेषु राजेन्द्र ऋते विष्णुं सनातनं ।
वासुकिर्व्वहुशीर्षस्तु नागेन्द्रो मौनमास्थितः । तप आचरते सम्यक् निधाय मनसा मनः । १२०७५
शेषः सत्यधृतिर्नागो बलवान् ब्रह्मसम्भवः । वृक्षमारुह्य धर्म्मात्मा अवाक्शीर्षोऽवलम्बते ।
जिह्वाभिर्ल्लिहानाभिर्गोचरं विषमुत्सृजन् । समासहस्रं संपूर्णं निराहारस्तपोधनः ।
कालकूटं विषं तद्धि सुमहत् समपद्यत । येन लोको ह्यभिग्रस्तो न सुखं विन्दते नृप ।
सर्व्वत्रानुगतं तीक्ष्णं भुजगेषु महीतले । जङ्गमं स्थावरञ्चैव सर्व्वत्रानुगतं विषं ।
परस्परं विरुद्धेन हिंसायुक्तेन भारत । नाशयत्यात्मनोऽङ्गानि तेन तीक्ष्णेन भारत । १२०८०
अथ ब्रह्मा महाभागो भूतानां हितकाम्यया । मन्त्रं विसृजते राजन् ब्रह्माक्षरमयं हितं ।

गरुत्मान् विततैः पक्षैर्नखाग्रैः सचिवं महीं । समाधन्तं संपूर्णं मज्जायेणावलम्बते ।
पर्णभारैश्च विकचैर्विशीर्णैर्वसुधातले । रराज वसुधा चैव तैः पर्णैर्म्मलचिचितैः ।
येन वित्तेन जीवेयुः सर्व्वभूतानि भारत । इह लोके मनुष्येन्द्र देवलोके च भारत ।
द्यौरिवाचितनक्षत्रा महीतलविसर्पिभिः । भगवान् हिमसंपाते तपश्चैकचरो वशी । १२०८५
पुष्कराश्रमि धर्मात्मा मनुष्योऽजिनमूर्द्धजः । अथ सत्यसमाकस्य पृथिवी शान्तदेहिनी ।
तपश्चरति धर्म्मात्मा वाक्संयम्य दक्षिणं । सायं वर्षसहस्रञ्च प्रत्येकञ्च सुव्रता ।
तपश्चरति संयोगाद्वायुभक्षा समाहिता । समाधियोगात् सङ्गादा ब्रह्मयोगस्य भारत ।
येनेयं पृथिवी राजन् धार्य्यते ब्रह्मयोगिना । अनाद्यन्तमनित्येन सर्व्वत्र विषयेषिणा ।
योऽसौ विष्णुरगाधात्मा परमात्मा निराकृतिः । दिनेऽनिवर्त्ती भवति रात्रौ भवति वै स्थिरः । १२०९०
सत्यसन्धः स धर्म्मात्मा कामकारकरोऽभवत् । तस्य वः सोमतः पाणिः पृथिव्यां पृथिवीसमः ।
रात्रौ तपसो भवति मण्डलं विपुलं नभः । स चन्द्रविषयं राजन्नाक्रमयामास दृश्यति ।
ग्रहाणां गतयश्चैव ताराणाञ्च विशेषतः । तां छायामाविशत् सोमात् सवल्लिर्मण्डलेन वै ।
पृथिव्यां दक्षिणे हस्ते महायोगी महामनाः । सैषा छाया वशीभूता शशिमण्डलमाविशत् ।
अलिङ्गा पृथिवीलिङ्गादद्भुतादक्षया दिवि । अङ्गैरङ्गान्युपगुह्य तपश्चरति दुश्चरं । १२०९५
निश्चयात् प्रोक्ष्य पादौ तु पृथ्वी वाक्यमुपागता । सर्व्वार्त्तिभिः पीडमानाद्रक्षिष्यति महीतलात् ।
महीव चाम्बुरमनायुगान्ते विष्णुतेजसा । रराज सूर्य्यरश्मिभिर्व्यतिषक्ता महानदी ।
स्फाटिकेव शुभा सैषा काञ्चनैर्धातुभिर्वृता । आदित्येन समादत्ता रश्मिजैर्योऽभिसंभवैः ।
मण्डलान्तर्गता देवी चक्षुषा नोपलभ्यते । रश्मिभिः पुनरुत्कीर्णा ततो योगेन धावति ।
आकाशगङ्गा संवृता विपुलैरम्बुबिन्दुभिः । शीतच्छायैश्च तरुभिर्लताभिश्च सुगन्धिभिः । १२१००
पद्मषण्डैश्च विविधैः शुशुभे दिव्यगन्धिभिः । काञ्चनापीडजघना स्फाटिकाम्बरमेखला ।
पद्मरेणुभिरापीता चक्रवाकावतंसिका । नीलगर्भसुकेशान्ता पुष्पसञ्चयसंकुला ।
शोभते विप्रसर्पन्ती प्रमदेव विभूषिता । सैषा गङ्गाफलं लेभे पुष्करेषु समागता ।
सुतपाश्चन्द्रविहिता लोकानां धारणे रता । सरस्वती स्वरैर्व्यक्तमधीते ब्रह्मवादिनी ।
पृष्ठात्प्रयाता शैलेन्द्रे मन्दरे मन्दगामिनी । सस्वयंश्चतुरो वेदान् पादैश्चतुर्भिराहृतान् । १२१०५
यजुर्भिः सामभिश्चैव ऋयिताञ्चिकया तथा । अर्चिभिर्ज्वलनप्रख्यैस्तपसा दग्धकिल्बिषैः ।
सुपार्श्वस्य गिरेः पादैः परिदायैः सुपार्श्वैः । निखनन् सर्व्वभूतानि नियमेन च दृश्यते ।
मन्दराग्रे त्रिपर्य्यन्तं जगत्कृत्स्नमतीन्द्रियं । विरामनियमे प्राप्ते तूष्णीभूता बभूव ह ।
न वाचमीरयद्देवी नियामत् सत्यवादिनी । अथ भूतानि सर्व्वाणि तूष्णींभूतानि सर्व्वशः ।
न शेकुरभिधानार्थं व्याहर्त्तुं वदनेष्वथात् । विभज्य योगं मनसा सर्व्वभूतेष्वनुग्रहं । १२११०
सरस्वती स्वरयुता व्याजहार महास्वनं । सरस्वत्या समायुक्तां शिवां गृह्णन्ति देहिनः ।

अग्निमेवाथ ते सर्व्वे गानं गायन्ति शिल्पवा । आदित्या वसवो रुद्रा मरुतश्चाश्विभिः सह ।
जटिलाश्चीरवसना मुञ्जमेखलधारिणः । गन्धर्व्वाः किन्नराश्चैव सनागाः सह चारणैः ।
तपश्चरन्ति सहिताः पुष्करेषु मनीषिणः । अपि कीटपतङ्गैश्च सह सर्व्वैः सरीसृपैः ।
शोषयन्ति शरीराणि तपसोग्रेण यत्नतः । विष्णुर्विष्णुलमापन्नो देहान्तरविधानवान् । ११११५
संरक्षति महायोगी सर्व्वांस्तान् ब्रह्मचारिणः । पुष्करे रमते विष्णुः पुनरेव द्विधाकृतः ।
दीप्यमानः स्वतेजोभिर्विधूम इव पावकः । सोऽग्निर्मन्त्रसमुद्भूतः पृथिवीं तापयन्निव ।
प्रधावति समं तेन मण्डलं दशयोजनं । विरराजार्चिभिर्दीप्तैः हुतशावलम्बिभिः ।
शिरीषपार्श्वविभवैर्व्वायुस्तैरिव दीपितः । तस्याग्नेर्विस्फुलिङ्गानां न शेकुर्व्वारणे रताः ।
विप्रकीर्णस्य वासुधामर्य्यादामिव भास्करः । सोऽग्निर्दीप्यति सन्ध्यायां विधूम इव पावकः । १११२०
स्खलिग्भिर्ज्ज्वलनप्रख्यैर्व्विकृतो वा महाध्वरे । सोऽग्निर्धूमगलस्तत्र तिष्ठते विपुलस्तदा ।
यावद्विष्णुः क्रमप्राप्तो नियमस्य समापनात् । रक्षां कृत्वा न तं विद्याद्विष्णुर्विष्णुपराक्रमः ।
भूत्वा शतशरीरो वै नागो वालाहकोऽभवत् । तमग्निमात्मसंदृष्टं सेलिहानं महामतिः ।
प्रतिप्रवृद्धं तेजोभिर्भूतानां हितकाम्यया । वारिणा सुखशीतेन प्राणिनां प्राणवर्द्धनः ।
न्यमिञ्चद्दहनं तत्र नागो वालाहकस्तदा । ततः सिद्धगणैर्व्विष्णुः पुष्करे तप्यते तपः । १११२५
संहृत्य मनसात्मानं महायोगी महाबलः । संहृत्य पादगात्राणि मनो मूर्द्ध्नि विधारयन् ।
अचलं स्थानमासाद्य तूष्णीभूतो बभूव ह । एष धर्म्मो हि धर्म्माणां योगध्यानविकल्पितः ।
हितः सर्व्वेषु भूतेषु इह चामुत्र चोभयोः । अथ दैत्या हतास्तत्र समागम्योद्यतायुधाः ।
मायाप्रायैर्व्वहुविधैर्नगरैरभिसंवृताः । अग्निं दैत्याः पर्व्वतौघैरभिघ्नन्ति परन्तप ।
ज्वलन्तं ज्वलनप्रख्या महाकाया महाबलाः । मेघीभूतास्तु मायाभिर्व्वर्षन्ति बलदर्पिताः । १११३०
तस्मिन्नेवाग्निसंघाते संघातं तं महाबलाः । ते शैलास्तर्व्वथा दग्धाः शतशोऽथ सहस्रशः ।
युगान्ते प्रभुरादित्यो जनानिव दिधक्षति । न शेकुरग्निं दैत्यास्ते मायाभिमुखमुद्यतं ।
आदित्यमिव दीप्यन्तं नभः सूर्य्योदये यथा । वितस्तैस्तथैः सर्व्वैर्दैत्या भग्नपराक्रमाः ।
गन्धमादनमासाद्य निपतन्ते नगमूर्द्धनि । स चाग्निर्व्वायुवेलैर्व्वैर्विद्युद्भिः सह सङ्गतः ।
अन्तरीक्षचरान्दैत्यान्निर्द्दहन् विचरन्दिवि । नागो वालाहकश्चैव मेघैः संघातमागतः । १११३५
मुमोच सलिलं भूमौ पर्ज्जन्य इव वृष्टिमान् । मन्त्रैः सञ्चोदितो नागो द्विजेन्द्रो वदनोद्गतैः ।
मुमोच तोयसंघातं मानसन्निभं जलं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे अष्टादशाधिकद्विशततोऽध्यायः ॥ २१८ ॥

॥ जनमेजय उवाच ॥ संयुज्य तपसा देवाः किं कुर्व्वन्त ततः परं । न हि तद्विद्यते लोके तपसा यन्न लभ्यते ।
॥ वैशम्पायन उवाच ॥ अथ दीक्षां समास्थाय सर्व्वे विष्णुमया गणाः । पुष्करादग्निमुद्धृत्य प्रणीय च यथाविधि ।
जुहुवुर्मन्त्रविधिना ब्राह्मणा मन्त्रचोदिताः । हविषा मन्त्रपूतेन यथा वै विधिरेव च । १११४०

स चाग्निर्व्विधिवत्तत्र वर्द्धते ब्रह्मतेजसा। तेजोभिर्व्वज्जलीभूतः प्रभुः प्रकृषविग्रहः।
ब्रह्मदण्ड इति ख्यातो वपुषा निर्द्दहन्निव। दिव्यरूपप्रहरणो ह्यसिचर्म्मधनुर्द्धरः।
सगदो लाङ्गली चक्री शरी चर्म्मी परश्वधी। शूली वज्री खड्गपाणिः शक्तिमान् वरकार्मुकी।
विष्णुश्चक्रधरः खड्गी मुषली लाङ्गलायुधः। शरो लाङ्गलमालम्ब्य मुषलञ्च महाबलः।
वज्रमिन्द्रस्तपोयोगाच्छतपर्व्वाणमाक्षिपत्। रुद्रः शूलं पिनाकञ्च मनसा धारयन् प्रभुः। १२१४६
मृत्युर्द्दण्डं सपाशञ्च कालः शक्तिमगृह्णत। जग्राह परशुं त्वष्टा कुवेरस्य परश्वधं।
निर्व्विकारैः समायुक्ताः शतशोऽथ सहस्रशः। विश्वकर्म्मा च त्वष्टा च चक्राते ह्यायुधं बहु।
इन्द्रायाशीरथं प्रादात् सूर्य्याय च प्रतापिने। परमात्मा ददौ विष्णुरुद्राय च महात्मने।
छन्दोमिरेव त्वष्टा च स चकाराथ वाहिनीं। विश्वकर्म्मा विमानानि चकार बहुभिः क्रमैः।
शरीरांशं समुद्धृत्य विष्णुः सत्यपराक्रमः। पुष्करात् पर्व्वणि घनात् शतसाधं प्रवर्त्तयत्। १२१५०
यांश्चैव सूर्य्यच्छत्राणां त्वरया समकल्पयत्। ययाऽभियुज्य संग्रामे शत्रुं निर्व्विभिदे रणे।
स तं दण्डं समुचितं निर्व्विकारं समाहितं। ब्रह्मा जग्राह विधिना अन्तर्द्धानगतः प्रभुः।
स्वैः प्रभावैश्च विधिना सोऽस्त्रग्रामश्चतुर्व्विधं। ऐन्द्रमाग्नेयवायव्यं रौद्रं रौद्रेण वर्च्चसा।
एभिर्व्विकारैः संयुक्ता दितेः पुत्त्रा महाबलाः। तपसा शिक्षया चैव अस्त्रैः प्रहरणैरपि।
बलेन चतुरङ्गेण वीर्य्येण सुसमाहिताः। अप्रधृष्या रणे सर्व्वे क्षणेनैवाभवंस्तदा। १२१५५
ते विहाय गुहामध्ये सभाण्डोपस्करे रथे। मन्दरस्य गिरेः पादे विचेरुर्व्वसुधातले।
चतुरङ्गं बलं सर्व्वं संहृत्य तपसः प्रभुः। विष्णुरेव महायोगी चचार वसुधातले।
भूयोऽन्यत्तप आभिद्युश्चरन्तो ब्राह्मणैः सह। तैश्च सर्व्वैः सुरगणैश्चर्म्मचीरनिवासिभिः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे ऊनविंशत्यधिकद्विशतोऽध्यायः॥ २१९॥

॥ जनमेजय उवाच॥ वर्त्तमाने खिले ब्रह्मन्निर्म्मर्य्यादे महायहे। अविनाशे च भूतानां कथमासन् प्रजास्तदा।
॥ वैशम्पायन उवाच॥ पृथुं वैण्यं प्रजापालमभ्यषिञ्चत् प्रजापतिः। राज्याय ऋषिभिः सार्द्धं प्रजा धर्म्मपरायणाः। १२१६०
एष नः परमो राजा सानुरागो व्यजायत। त्रेतायां संप्रवृत्तायामन्योन्यमनुजल्पिरे।
एष नो वृत्तिदाता च शिल्पानाञ्च समर्पिता। निर्म्माता सर्व्वभूतानां सत्यप्राप्तेन कर्म्मणा।
एतस्मिन्नन्तरे देवा गन्धमादनसानुषु। बहुभिर्नियमैः श्रान्ता निषण्णा गिरिसानुषु।
अथ गन्धं समासाद्य समन्ताद्देवदानवाः। माधवे समये प्राप्ते तेन गन्धेन दर्पिताः।
पुष्पमात्रस्य यद्वीर्य्यं मारुतेन विसर्पितं। मनोग्राहि सुखं सर्व्वं पार्थिवं गन्धमुत्तमं। १२१६५
ते दैत्यास्तेन गन्धेन किञ्चिद्विस्मयमागताः। प्रसन्नमनसो भूत्वा परं सौख्यमुपागताः।
ऊचुश्च सहिताः सर्व्वे तेन गन्धेन दर्पिताः। पुष्पमात्रस्य यद्वीर्य्यं किं तस्य फलतो भवेत्।
अनुमानेन विज्ञेया विविधाः कर्म्मबुद्धयः। शुभाश्चैवाशुभाश्चैव बुद्धिप्रायेण देहिनां।
तस्मादयं पयोमध्ये ओषधीर्निर्म्मयामहे। मन्दरेण विशालेन बलिना कामरूपिणा।

समुद्रमभिसंरब्धा मथ्नीमः सोमजं जलं । पीत्वा च सहिताः सर्व्वे प्रस्थिताः कामरूपिणः । ११९७०
विष्णुरेवाग्रणीस्तेषां भविष्यति महाबलः । दिवञ्च वसुधाञ्चैव भोक्ष्यामः सह सूनुभिः ।
समूलपत्रशाखाश्च सपुष्पाः सफलाश्रिमः । सर्व्वप्रहांश्च गृह्णीमो वसुधां वसुधातले ।
उद्धृत्य गिरिपादेभ्यो गन्धमादनसानुजान् । प्रभाष्य वचनं दैत्या मन्दरस्य प्रकम्पने ।
समुद्धर्त्तुं प्रधावन्तः कम्पयन्ति स्म मेदिनीं । निश्चयेन महावीर्य्या बाहुभिः परिणाहिभिः ।
न शेकुस्ते समुद्धर्त्तुं शैलेन्द्रं दनुवंशजाः । निपेतुर्भूमिमभिधृष्टा विपुले पर्व्वतान्तरे । ११९७५
समाधायात्मनात्मानं तपसा दग्धकिल्विषाः । पितामहं प्रपद्यन्त शिरोभिः कामरूपिणः ।
तेषां मनोऽभिलषितं ब्रह्मा सर्व्वगो वशी । ज्ञात्वा बहुविधैर्व्वाक्यैर्व्याजहार सरस्वतीं ।
अशरीरां शरीरस्थः परया वर्णसम्पदा । सर्व्वलोकपतिर्ब्रह्मा लोकानां हितकाम्यया ।
आदित्यैर्व्वसुभिश्चैव रुद्रैश्च समरुद्गणैः । देवैर्यक्षैः सगन्धर्व्वैः किन्नरैश्च पृगाधिभिः ।
समेत्य सहितैः सर्व्वैरुद्धर्त्तुं शक्यते गिरिः । अमृतार्थे महातेजा धातुभिः समरञ्जितः । ११९८०
सुरासुरगणाः सर्व्वे समुत्पाट्य महागिरिं । हस्ताहस्ताः प्रपद्यन्ति क्षीरधौ हि नवं रसं ।
एतच्छ्रुत्वा तु वचनं सर्व्वेषामन्तिके तदा । दैतेया बाहुबलिनो मनोभिर्वाग्भिरेव च ।
विक्रोडभूता बहुधा बभूवुर्लवणाम्भसः । यत्र पुष्करविन्यस्तं सहितैर्देवदानवैः ।
सुरासुरगणाः सर्व्वे सहिता लवणाम्भसः । मन्दरं पुष्करं कृत्वा नेत्रं वासुकिमेव च ।
समाः सहस्रं मथितं जलमोषधिभिः सह । क्षीरभूतं समायोगादमृतं समपद्यत । ११९८५
तज्जहुरसुराः पूर्व्वमाक्रान्ता लोभमन्युना । तदा पश्चाज्जहुर्देवाः कामतेजोबलान्विताः ।
धन्वन्तरिस्तथा मद्यं श्रीर्देवी कौस्तुभो मणिः । शशाङ्को विमलश्चापि समुत्तस्थुः समन्ततः ।
उच्चैःश्रवा हयो रम्यः पीयूषं तदनन्तरं । पश्चाद्देवास्तदा पातुमुद्यता राहुसम्भवम् ।
न च केचित् पिबन्त्यन्ये दैत्या नैव च दानवाः । चिच्छेदाय हरिः संख्ये राहोश्चक्रेण कं मृधे ।
अभियुक्तं पितृगणैर्मुनिभिश्च सनातनैः । तदिन्द्रहस्तादमृतं जहार पृथिवी स्वयं । ११९९०
जगामान्तर्गता देवी ब्रह्मवाक्यप्रचोदिता ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥
॥ जनमेजय उवाच ॥ निहते दैत्यसंघाते विष्णोश्चातिपराक्रमे । दैतेया दानवयाश्च किमिच्छन्ति पराक्रमात् ।
॥ वैशम्पायन उवाच ॥ दानवा राज्यमिच्छन्ति पराक्रम्य महाबलाः । तप इच्छन्ति सहिता देवाः सत्यपराक्रमाः ।
॥ जनमेजय उवाच ॥ कथं कालस्य महतो हिरण्यकशिपुस्तदा । यजते ब्रह्मणः क्षेत्रे प्राप्तैश्वर्य्यः स कामदः ।
॥ वैशम्पायन उवाच ॥ यजेद्दक्षसवर्णेन राजसूयेन पार्थिवः । क्रतुना दानवश्रेष्ठो वसुधायां महाबलः । ११९९५
गङ्गायमुनयोर्म्मध्ये यदभूद्विपुलं तपः । समेयुस्तत्र सहिता यजमाने महासुरे ।
ब्राह्मणा वेदविद्वांसो महाव्रतपरायणाः । यतयश्चापरे शिष्टा योगधर्म्मेण भारत ।
मुनयो वालिखिल्याश्च नानाधर्म्मेण शोषिताः । बहवो हि द्विजा मुख्या नित्यं धर्म्मपरायणाः ।

